चेटी—(क) भट्टिदारिए ! ताणि कुसुमिदाणि णाम, पवाल-न्तरिदेहिं विअ मोत्तिआलम्बएहिं आइदाणि कुसुमेहिं ।

---

(क) भर्तृदारिके ! ते कुसुमिता नाम, प्रवालान्तरितैरिव मौक्तिकलम्बकैराचिताः कुसुमैः ।

---

कुसुमानि पुष्पाणि सञ्जातानि येषां तादृशाः, 'तदस्य सञ्जात'मित्यादिना इतच्प्रत्ययः । 'पश्यामी'ति क्रियापदं च वाक्यसमाप्तिसूचकाद् 'इति'-शब्दादनन्तरं योज्यम्, इति पूर्वप्रदर्शितो वाक्यार्थः कर्मरूपः । अयि ! सखि ! तेषु शेफालिकावृक्षेषु पुष्पाण्युद्गतानि नवेत्येवावलोकयाम्यहम् । अत एतद्दिदृक्षयैव साम्प्रतमत्रागतास्मीति भावः ।

प्रमदवनागमनप्रयोजनं निशम्यैवं पद्मावत्याः शेफालिकाकुसुमोद्गम-सम्बन्धिनि प्रश्ने प्रतिपादयत्युत्तरं चेटी—भट्टिदारिए इति । ते इत्यनेन पूर्वप्रक्रान्ताः शेफालिकागुल्मका गृह्यन्ते, 'नामे'त्यत्र निश्चयार्थकम् । प्रवा-लान्तरितैः, प्रवालैर्विद्रुममणिभिरन्तरितानि व्यवहितानि युक्तानीति यावत् तैः, मौक्तिकलम्बकैरिव, मुक्ता एव मौक्तिकानि तेषां लम्बकानि ललन्तिका-भिधाः कण्ठभूषणविशेषाः तत्सदृशैः, कुसुमैरित्यस्योपमानमिदम्, 'लम्बकं तु ललन्तिका' इति कोषः । आचिताः व्याप्ताः परिपूर्णा इति यावत्, दृश्यन्ते इति शेषः । शेफालिका ध्रुवं विकसिताः सन्ति । पश्य, मूलेऽरुणानि तदूर्ध्वं च धवलान्येतानि पुष्पाणि खलु प्रवालमिश्रमुक्तामणिनिर्मितकण्ठ-भूषणसदृक्षाणि लक्ष्यन्ते । इतस्ततो लग्नानि कुसुमानि लम्बमानकण्ठाभरणा-नीव प्रतीयन्त इति कुसुमानां ललन्तिकासाम्यं प्रतिपादितमत्र ।

शेफालिकाविकासमाकलय्य पद्मावती चेटीं तत्कुसुमावचयनक्रियायां

---

दासी—राजकुमारी ! वे तो खिले । बीच २ में मूँगे और मोतियों से गूँथे हुए हारों की भांति फूलों से परिपूर्ण हैं ।

पद्मावती—(क) हला ! जदि एव्वं, किं दाणिं विलम्बेसि ?

चेटी—(ख) तेण हि इमस्सिं सिलावट्टए मुहुत्तअं उपविसदु भट्टिदारिआ । जाव अहं वि कुसुमावचअं करेमि ।

पद्मावती—(ग) अय्ये ! किं एत्थ उपविसामो ?

---

( क ) हला ! यद्येवं, किमिदानीं विलम्बसे ?

( ख ) तेन हि अस्मिन् शिलापट्टके मुहूर्तकमुपविशतु भवती । यावदहमपि कुसुमावचयं करोमि ।

( ग ) आर्ये ! किमत्रोपविशावः ?

---

नियोक्तुमिच्छन्ती ब्रूते—हला इति । एवं, शेफालिकाः कुसुमिता इति यावत् । विलम्बसे विलम्बं करोषि, अर्थात्कुसुमावचये । यदि सखि ! शेफालिका विकसितास्तर्हि साम्प्रतं तत्कुसुमावचये किमिति त्वया विलम्बः क्रियते ? अतिशीघ्रं तानि कुसुमान्यवचीयन्तामित्यर्थः ।

इत्थं पद्मावतीवचनमाकर्ण्य कुसुमावचयं प्रतिजानीते चेटी—**तेण हीति** । तेन हि अतो हेतोः, पुष्पावचयस्येदानीं मया करणीयत्वादित्यर्थः । अस्मिन् समीपस्थे, शिलापट्टके बृहत्पाषाणफलके, मुहूर्तकं क्षणमिति क्रियाविशेषणम् । यावता कालेन मया कुसुमावचयं कृत्वागम्यते, तावत्कालपर्यन्तं भवत्या राजकुमार्या विशाले दृषच्छकलेऽस्मिन्नुपविश्य विश्रम्यताम् । अत्र 'मुहूर्तकमुपविशतु' इत्यनेन 'कार्येऽस्मिन् मत्कर्तृको विलम्बो न स्यात्, सत्वरमेवाहमवचितकुसुमा समागमिष्यामि भवत्याः समीप'मिति चेट्या सूचितम् ।

चेटीवचनानुरोधाद् दृषत्फलके समुपवेष्टुमुद्यता पद्मावती स्थानमात्मोपवेशनयोग्यं निर्दिशन्ती तत्र वासवदत्ताया अनुमतिं प्रार्थयते—**अय्ये**

---

पद्मा०—यदि ऐसा है, तो क्यों देरी कर रही हो ?

दासी—तब तो इस पत्थरकी चट्टान पर राजकुमारी घड़ी भर बैठें । तबतक मैं भी फूलों को बटोरती हूं ।

पद्मा०—( वासवदत्ता से ) आर्ये ! क्या हम दोनों यहां बैठें ?

वासवदत्ता—(क) एव्वं होदु ।

[ उभे उपविशतः । ]

चेटी—[ तथा कृत्वा ](ख) पेक्खदु पेक्खदु भट्टिदारिआ अद्धमणसिलावट्टएहिं विअ सेहालिआकुसुमेहिं पूरिअं मे अञ्जलिं ।

---

( क ) एवं भवतु ।

( ख ) पश्यतु पश्यतु भर्तृदारिका अर्धमनःशिलापट्टकैरिव शेफालिकाकुसुमैः पूरितं मेऽञ्जलिम् ।

---

इति । अयि माननीये ! स्थानेऽस्मिन्नावाभ्यामुपवेष्टव्यं किमु ? अत्रोपवेशनमिदानीमस्मदीयं भवत्यै रोचते ?

आत्मनोऽनुमतिं दर्शयत्युपवेशने वासवदत्ता—एव्वं इति । बाढम्, अत्रोपविश्यतामावाभ्याम् ।

उभे उपविशतः-इत्यनेन द्वयोर्वासवदत्तापद्मावत्योरुपवेशनं दर्शितम् ।

अवचितपुष्पा चेटी पद्मावतीमुपगम्य ब्रूते—तथा कृत्वेत्यादि । तथा कृत्वा पुष्पाण्यवचित्य तैर्हस्तद्वयमापूर्य । 'पश्यतु पश्यतु' इति पौनःपुन्ये द्विःप्रयोगः, तेन च सौन्दर्यममीषां कुसुमानां लोचनासेचनकं सूचितम् । अर्धमनःशिलापट्टकैरिव, अर्थानुकूल्यसामर्थ्याभावादत्रार्धपदं व्यस्तं युज्यते, अर्धे मूलभागे मनःशिलायाः 'मैनशिल' इति लोके प्रसिद्धस्य गिरिप्रभवरक्तवर्णधातुविशेषस्य पट्टकैः खण्डैरिव, स्थितैरिति शेषः । 'धातुर्मनःशिलाद्यद्रेः', 'मनःशिला मनोगुप्ता' इत्यमरौ । पूरितं पूर्णम्, पूरयतेः क्तः । अञ्जलिं कनिष्ठिकाप्रदेशतः संयोजितौ पुटरूपतां प्रापितौ हस्तौ, 'तौ युतावञ्जलिः पुमान्' इत्यमरः । 'कुसुमैः परिपूर्णमञ्जलि'मित्यस्य 'अञ्जलिस्थानि

---

वासव०—अच्छा, ऐसा ही सही ।

( दोनो बैठती हैं )

दासी—( फूलों को बटोर कर ) देखिये, राजकुमारी ! देखिये, आधे भाग में मैनसिल के टुकडों की तरह हरसिंगार के फूलों से मेरी अंजुली भर गई ।

**पद्मावती**—[ दृष्ट्वा ](क) अहो ! विइत्तदा कुसुमाणं । पेक्खदु पेक्खदु अय्या ।

**वासवदत्ता**—(ख) अहो ! दस्सणीअदा कुसुमाणं ।

---

( क ) अहो ! विचित्रता कुसुमानाम् । पश्यतु पश्यत्वार्या ।
( ख ) अहो दर्शनीयता कुसुमानाम् ।

---

पुष्पाणी'ति तात्पर्यम् । अयि ! राजकुमारि ! ममेदं पाणिद्वयमिदानीं शेफालिकाप्रसूनैः परिपूर्णं वर्तते । अमूनि किल कुसुमानि कथं नाम सुन्दरतां वहन्ति ? मुहुरालोचनीयमेतदमीषां सौन्दर्यं भवत्येति भावः । इदमित्थं निगद्य चेट्यास्तत्समर्पणं पद्मावत्यै व्यङ्ग्यमर्यादया बोद्धव्यम् । इह किल शेफालिकापुष्पाणामारुण्येन मूलप्रदेशे मनःशिलाशकलसादृश्यं दर्शितं कविना । तानि च शकलानि लम्बमानान्येवात्र कवेः शेफालिकाकुसुमोपमानत्वेनाभिमतानीति ।

चेट्या दत्तानि तानि पुष्पाण्यादाय दृष्ट्वा च पद्मावती तत्सौन्दर्यं प्रशंसन्त्याह—अहो इति । विचित्रता श्वेतरक्तेत्युभयविधवर्णसौन्दर्यशालिता । प्रायः कुसुमान्येकवर्णानि भवन्ति, एतानि तु वर्णद्वयवन्तीति नूनं विस्मयकरत्वमेतेषाम् । को नाम नैतान्यवलोक्य विस्मयविकस्वरस्वान्तो न स्यात् ? इत्येवमुक्त्वा तानि वासवदत्तायै समर्पयन्ती ब्रूते—पेक्खदु इति । अत्रापीयं वीप्सा पौनःपुन्ये, अर्थाक्षिप्तमत्र पुष्परूपं तत्सौन्दर्यरूपं वा कर्म । अयि ! मान्ये ! वारंवारमवलोकनीयं तत्रभवत्या भवत्या 'कुसुमानि कथं तावदेतानि सौन्दर्यं वहन्ती'ति ।

पद्मावत्या समर्पितानां सुमनसाममन्दं सौन्दर्यमभिनन्दन्ती ब्रूते वासवदत्ता—अहो इति । दर्शनीयता सुन्दरता । अयि ! अमूनि किल पुष्पाणि विचित्रं सौन्दर्यं दर्शयन्ति ।

---

पद्मा०—( देखकर ) वाह ! क्या ही विचित्र ये फूल हैं । आप देखें तो सही ।
वासव०—ये फूल तो बड़े ही दर्शनीय हैं ।

चेटी— (क) भट्टिदारिए ! किं भूयो अवइणुस्सं ?

पद्मावती—(ख) हला ! मा मा भूयो अवइणिअ ।

वासवदत्ता—(ग) हला ! किंणिमित्तं वारेसि ?

---

( क ) भर्तृदारिके ! किं भूयोऽवचेष्यामि ?

( ख ) हला ! मा मा भूयोऽवचित्य ।

( ग ) हला ! किन्निमित्तं वारयसि ?

---

उभाभ्यां पद्मावतीवासवदत्ताभ्यां कृतं प्रसूनप्रशंसनं श्रुत्वा पुनः प्रसूनानयनप्रस्तावमुपस्थापयन्ती पृच्छति चेटी पद्मावतीम्—भट्टिदारिए इति । अवचेष्यामीति विध्यर्थे लृट्, अवचिनुयामिति तदर्थः । अयि राजकन्ये ! किमिदानीं पुनः प्रसूनान्यवचेतव्यानि मया ?

चेट्याश्चिकीर्षितं प्रसूनावचयनं निषेधति पद्मावती—हला इति । हलेति चेट्याः सम्बोधनम्, 'मा मे'ति द्विरुक्तिर्निषेधं द्रढयति । अयि ! सखि! न तावदिदानीं प्रसूनावचयस्ते कार्यः । नास्ति तत्प्रयोजनं किमपि । अत्र मायोगे 'अवचित्ये'ति क्त्वाप्रत्ययस्तु पाणिनीयशासनविरुद्धो महाकवीनां निरङ्कुशत्वात्कृतो वेदितव्यः ।

कृते च पद्मावत्या तन्निषेधे तत्र कारणजिज्ञासां दर्शयति वासवदत्ता—हला इति । आवन्तिका चेयं वासवदत्ता कार्यगौरवं कलयन्ती सपत्नीमपि तां पद्मावतीं प्रियसखीनिर्विशेषभावेन सम्भावयतीति पूर्वं भूयसा प्रतिपादितम् । अतश्च 'हला' इति सम्बुद्धिः पद्मावतीं प्रति युज्यते तस्याः । सखि ! पद्मावति ! वैचित्र्यममीषां कुसुमानां पूर्वं प्रशंसितवत्यसि । साम्प्रतं रुचिकराण्यपि तानि पुनराहर्तुं किमिति चेटीं निषेधसि ?

---

दासी—राजकुमारी ! क्या फिर और चुनूँ ?

पद्मा०—अरी ! नहीं, और मत चुनना ।

वासव०—हे सखि ! क्यों मना करती हो ?

पद्मावती—(क) अय्यउत्तो इह आअच्छिअ इमं कुसुम-समिद्धिं पेक्खिअ सम्माणिदा भवेअं।

(क) आर्यपुत्र इहागत्येमां कुसुमसमृद्धिं दृष्ट्वा सम्मानिता भवेयम्।

तन्निषेधकारणं प्रकटीकरोति पद्मावती—अय्यउत्तो इति। कुसुमानां समृद्धिराधिक्यं परिपूर्णतेति यावत्, ताम्। सम्मानिता आदृता, 'भवेय'मिति सम्भावनायां लिङ्। अत्र 'सम्माणिदा (सम्मानिता)' इति कर्मवाच्यप्रयोगानुरोधाद् 'अय्यउत्तेण (आर्यपुत्रेण)' इति तृतीयान्तः प्रयोक्तुं युज्यते कर्ता। 'अय्यउत्तो (आर्यपुत्रः)' इत्ययं प्रथमान्तकर्तृपद-प्रयोगस्तु चिन्त्यः। 'पेक्खिअ (दृष्ट्वा)' इत्यनन्तरं 'पसीदे, तेण च (प्रसी-देत्, तेन च)' इति मध्ये मुद्रणप्रमादात् त्रुटितं वा योजनीयम्। इत्थं सति कल्पिते 'प्रसीदे'दित्यनेन सम्बद्धः प्रथमान्तः कर्ता सङ्गच्छेत। सम्भावये-ऽहमत्रागतो मत्प्रियः समन्तात् पुष्पितं प्रमदवनं पश्यन् प्रसन्नो ममादरं कुर्यादित्यर्थः। अयमाशयः—"मत्प्रयत्नविशेषसम्पादितप्रसूनसुषमासम्भार-वीक्षणोत्फुल्लमानसो मदीयकार्यसन्तुष्टो मम स्वामी गौरवं दर्शयन् मयि परां प्रीतिं कलयेत्। कुसुमैर्हीनता च प्रमदवनस्य तन्मानसं दुःखाकुर्यात्ततश्च मयि प्रीतिरपि तदीया नूनं न्यूनतां दध्यात्। अतो हेतोरहं नेतोऽधिकं पुष्पावचयं रोचयामी"ति। अत्र तावदेके टीकाकृतः—"सम्माणिदा भवेअं" इत्यत्र 'सम्माणिदो भवे (सम्मानितो भवेत्)' इत्येव पाठो युक्तो भवेत्, आत्मसम्मानकामनापेक्षया भर्तृसम्मानकामनाया एवौचित्यात्। कथमन्यथा 'प्रियस्ते भर्ते'त्यादि वक्ष्यमाणं प्रश्नोत्तरं सङ्गच्छेत"–इत्येवं स्वकीयटीकायां लिखन्ति। 'संमानिता भवेय'मित्यतोऽपि तादृशार्थस्य

पद्मा०—आर्यपुत्र यहां आकर फूलों की बहार देख प्रसन्न होंगे, उससे मैं संमानित होऊँगी।

वासवदत्ता—(क)हला ! पिओ दे भत्ता ?

पद्मावती—(ख) अय्ये ! ण जाणामि, अय्यउत्तेण विरहिदा उक्कण्ठिदा होमि ।

---

(क) हला ! प्रियस्ते भर्ता ?

(ख) आर्ये ! न जानामि, आर्यपुत्रेण विरहितोत्कण्ठिता भवामि।

---

स्फुटं प्रतीयमानत्वात् 'प्रियस्ते भर्ते'त्यादिवक्ष्यमाणप्रश्नोत्तरसङ्गमनार्थमित्थंविधाभिनवपाठकल्पनायां किमपि कारणमर्थविशेषोपलब्धिं च नैव पश्यामः । प्रत्युत 'आर्यपुत्र' इति प्रथमान्तपदप्रयोगसङ्गतये कृतमेतत्पाठपरिवर्तनचापलं हास्यमेव पुष्णाति । 'आगत्य दृष्ट्वे'ति पूर्वकालिकक्रियायामन्वितस्य 'आर्यपुत्र' इति कर्तृयोगः कथं तावद् व्युत्पन्नैः पण्डितैः 'सम्मानितो भवे'दित्यनेन कर्तुं पार्यतामित्यहो ! महत्साहसं वैदुष्यं च तेषां प्रशंसनीयम् ।

इदमिदानीं पतिप्रीतिविषयकं प्रस्तावमुपक्षिप्तं पद्मावत्या अवगत्य तत्प्रीतेरियत्तां तत्र परिच्छेत्तुमिच्छन्ती पृच्छति पद्मावतीं वासवदत्ता—हला इति। सखि ! पतिमेतं प्रेमदृष्ट्या पश्यसि त्वम् ? अपि नाम ते वर्तते सहजं प्रेम पत्यौ ?

नवोढानुरूपलज्जाभावगोपितामुत्कण्ठाविशेषप्रकाशितां पतिविषयिणीमात्मनः प्रीतिं ध्वनयति पद्मावती—अय्ये इति । 'राजमन्त्रिणो यौगन्धरायणस्य स्वसारमिमां स्वसमीपे न्यासरूपेण स्थापितामावन्तिकामादरदृष्ट्या पश्यति पद्मावती'ति वासवदत्तामुद्दिश्य तत्कर्तृकम् 'आर्ये' इति सम्बोधनमिदं युज्यते । 'न जानामी'त्यत्र पूर्वप्रश्नार्थः कर्म, विरहिता वियुक्ता । अयि ! मान्ये ! आर्यपुत्रो मम प्रीतिपात्रं वर्तते न वे'त्येवं किमपि

---

वासव०—सखि ! तुम्हें पति प्यारे हैं ?

पद्मा०—आर्ये ! यह मैं नहीं जानती, पर उनके बिना जी नहीं लगता ।

**वासवदत्ता**—[आत्मगतम्] (क) दुक्करं खु अहं करेमि। इअं वि णाम एव्वं मन्तेदि।

---

(क) दुष्करं खल्वहं करामि। इयमपि नामैवं मन्त्रयते।

---

न ज्ञायते, किन्तु तद्वियुक्तया पर्युत्सुकया भूयते मयेत्यर्थः। आर्यपुत्रेण विना विम्लायमानाहं तद्वियोगं न सोढुं शक्नोमीति तात्पर्यम्। अत्र पूर्ववाक्यानुमितलज्जाभावाच्छन्नं प्रेमोत्तरवाक्यगतोत्कण्ठाभावप्रदर्शनाद् ध्वनिमर्यादया स्फुटं व्यक्ततां नीतम्। एतेन 'पतिर्मे प्रियो वर्तत' इत्येवं वासवदत्ताप्रश्नोत्तरमशाब्दं चतुरया पद्मावत्या स्फुटं प्रतिपादितम्।

श्रुतैतत्पद्मावतीवचसो वासवदत्तायामनसि गतं वितर्कं दर्शयति कविः—**दुक्करं** इति। दुष्करं दुःखेन कर्तुं शक्यम्, कठिनमिति यावत्, 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनेन खल्। अत्रार्थे प्रेमेति कर्म, खलु निश्चये। "अहो! यत्र सहजं निःसामान्यमनन्यगोचरं प्रेमाहं बिभर्मि, तत्रैव पद्मावत्यसौ प्रीतिमती वर्तते। स नूनमुभयाकृष्टश्चलचित्तो नैकत्र विशिष्टं स्थिरं प्रीतिभावं धत्ते, येन किल द्वयोः प्रियतमेन भूयते। न ज्ञायते मदीयं तद्विषयकं प्रेमेदं तत्प्रीतिमत्तां सम्पाद्य कथङ्कारं साफल्यमधिगच्छेदित्यतः कठिनमहं नूनमेतत्कर्तुं प्रवृत्तास्मि, यत्किल तत्प्रीतिमत्त्वसम्भावनया तमार्यपुत्रं प्रेमदृशा पश्यामी"ति गूढमाकूतं वासवदत्तायाः। तदेव दुष्करत्वं दर्शयते—**इअं वि** इति। अत्र नामेत्यलङ्कारो वाक्यस्य। मन्त्रयति गूढं भाषते। अनया पद्मावत्यापि यदा पूर्वोक्तमिदं निगद्यते, तदा निःसन्देहमेव मे तत्रानुरागस्तदनुरागसम्पादनविषये चिरात्साफल्यं तदभावं वा कलयेदित्यर्थः। एतेन—'साम्प्रतमहं सर्वथा सङ्कटे पतितास्मी'ति वासवदत्तायाश्चित्तानुवर्ती विषादोदयो व्यङ्ग्यः। अस्त्ययं प्रेम्ण एव महिमा, येन किल मध्ये मध्ये स्थिरभावपरिवर्तनं कृत्वा चित्ते भावान्तरमुत्थाप्यत इत्यलम्।

---

वासव०—(स्वगत) मैं बड़ा ही कठिन करती हूं। यह भी तो इसी प्रकार कहती है।

चेटी—(क) अभिजादं खु भट्टिदारिआए मन्तिदं—पिओ मे भत्तेत्ति ।

पद्मावती—(ख) एक्को खु मे सन्देहो ।

वासवदत्ता—(ग) किं किं ?

---

(क) अभिजातं खलु भर्तृदारिकया मन्त्रितं—प्रियो मे भर्तेति ।

(ख) एकः खलु मे सन्देहः ।

(ग) किं किम् ?

---

पद्मावत्या गूढोक्तेरभिप्रायं प्रकाशयति प्रशंसनपुरःसरं चेटी—अभिजादं इति । अभिजातं कुलीनतोचितम्, खलु निश्चये, मन्त्रितं गूढमुक्तम् । राजकुमार्या श्रीमत्या 'पत्यौ मम प्रेम वर्तते' इतीदृशं नूनं कुलीनतासदृशं त्रपावशाद् गूढं ध्वनिमार्गेणोक्तम् । इत्थमेव कुलीनया वक्तव्यमित्यर्थः । अथवा मन्त्रितं कथितम् । अत्र च पक्षे—आत्मनः प्रेम पत्यौ यत्प्रकाशितं वचसा राजकुमार्या, तत्तु कुलीनतासदृशमेव कृतम् । युज्यत एव कुलीनायाः प्रेम पत्याविति भावः ।

सम्प्रति पद्मावती वासवदत्ताया आत्मनश्च प्रीतिं परिच्छेत्तुकामाऽऽवन्तिकां वक्ति—एक्को इति । खल्विति वाक्यसौन्दर्ये । वक्ष्यमाण एकोऽयं संशयो वर्तते मे, स चायमपनोद्यस्त्वया यथोचितमुत्तरं दत्त्वेत्याशयः ।

कीदृशस्ते संशय इति तं तन्मुखाच्छ्रोतुमिच्छन्ती वासवदत्ताह—किं किं इति । द्विरुक्तिरियं तत्सूचने त्वरयति पद्मावतीम् ।

---

दासी—"पति मुझे प्रिय हैं" यह राजकुमारी ने अपनी कुलीनता के अनुकूल ही कहा ।

पद्मा०—मुझे एक संदेह है ।

वासव०—क्या ? क्या ?

पद्मावती—(क) जह मम अय्यउत्तो, तह एव्व अय्याए वासवदत्ताए त्ति ।

वासवदत्ता—(ख) अदो वि अहिअं ।

पद्मावती—(ग) कहं तुवं जाणासि ?

---

( क ) यथा ममार्यपुत्रस्तथैवार्याया वासवदत्ताया इति ।

( ख ) अतोऽप्यधिकम् ।

( ग ) कथं त्वं जानासि ?

---

तदेव संशयविषयकं प्रष्टव्यमुपक्षिपति पद्मावती—जह इति । अत्र प्रसङ्गानुरोधात् 'प्रिय' इति योज्यम् । यादृशं यत्परिमाणमार्यपुत्रे मम प्रेम, तादृशं तत्परिमाणमेव तद्वर्तते वा पूज्यायास्तत्र वासवदत्तायाः ? संशयश्लेष एवास्ति ममेत्यर्थः । उज्जयिनीवासिनीयं सूचितपूर्वं पत्युर्दर्शनसौभाग्यमिव पत्यौ वासवदत्ताप्रीतेरियत्तामपि कलयितुमर्हतीति स्थाने प्रश्नोऽयमावन्तिकां प्रति पद्मावत्याः ।

तत्रोत्तरं ब्रूते वासवदत्ता—अदो वीति । अत्रापि 'प्रिय' इत्यार्थम् । अतोऽपि त्वदपेक्षयापि, अधिकमिति क्रियाविशेषणम्, अस्तीति सामान्यक्रियाक्षेपः । यावत्प्रेम करोषि त्वं पत्यौ, सा किल तदपेक्षयापि विशिष्टमित्यर्थः । अत्र पुनर्वासवदत्ता महिमानं प्रेम्णः स्मरन्ती निह्नोतव्यमप्यात्मस्वरूपं मोहात्किञ्चित्प्रकाशितवती ।

'कथमिदं त्वया ज्ञायते यत्सा मत्तोऽपि तत्राधिकं स्निह्यती'त्याशयकं प्रश्नं करोति तद्विषये किञ्चिच्छङ्कमाना पद्मावती—कहं इति ।

---

पद्मा०—जैसे मुझे आर्यपुत्र ( प्रिय ) हैं, वैसे ही आर्या वासवदत्ता को भी हैं कि नहीं ।

वासव०—इससे भी अधिक ।

पद्मा०—तुम कैसे जानती हो ?

वासवदत्ता—[ आत्मगतम् ] (क) हं, अय्यउत्तपक्खवादेण अदिक्कन्दो समुदाआरो । एव्वं दाव भणिस्सं । [ प्रकाशम् ] जइ अप्पो सिणेहो, सा सजणं ण परित्तजदि ।

---

( क ) हम् , आर्यपुत्रपक्षपातनातिक्रान्तः समुदाचारः । एवं तावद् भणिष्यामि । यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति ।

---

पद्मावतीप्रश्नाकर्णनयाऽऽत्मस्वरूपप्रकाशनभिया स्वकीयोक्तौ सानुतापं मानसं वितर्कमाचरति वासवदत्ता-हं इति । हमिति शङ्कावितर्कानुतापसूचकमव्ययम् । आर्यपुत्रस्य पत्युः पक्षपातेन प्रेम्णा तन्महिम्नेति यावत्, समुदाचार आचारो मर्यादा, स चाऽत्र स्वरूपगोपनरूपः अतिक्रान्त उल्लङ्घितः । अहो ! पत्युः प्रेम्णो महिम्ना मुग्धयाऽत्यन्तमनुचितं कृतमेतन्मया यन्नाम यत्नेन गोपनीयमप्यात्मनो रूपं तादृशेन वचसा प्रकाशितम् । इत्येवमनुतप्य तत्रोत्तरमुपलभ्याह—एव्वं इति । तावद्वाक्यसौन्दर्यं । वक्ष्यमाणमीदृशं वचोऽत्र प्रयोक्तव्यं मयेत्यर्थः । तदेव प्रकटं ब्रूते—जइ इति । स्वजनं स्वात्मीयवर्गम् । 'परित्यजती'त्ययं वर्तमानत्वाविवक्षया सम्भावनार्थे लट् । परित्यजेदिति तदर्थः । न्यूनश्चेदभविष्यत्प्रेमा पत्यौ वासवदत्तायास्तर्हि सा स्वजनपरित्यागं कदापि नाकरिष्यत्* । न हि स्वल्पे सति प्रेम्णि सम्भवत्येतत् । अतो निश्चितमनुमातुं शक्यते तस्याः समधिकं प्रेम भर्तरीति भावः ।

---

वासव०—( स्वगत ) हूं ! आर्यपुत्र की तरफदारी ( पक्षपात ) से मैं व्यवहार को भूल गई या मेरा सदाचार सीमा से बाहर हुआ । अच्छा तो इस तरह कहूंगी । ( प्रकाश ) यदि उसका प्रेम थोड़ा होता तो वह कभी आत्मीय लोगों को न छोड़ती ।

---

* भर्तुरनुसरणं कर्तुकामया वासवदत्तया कृतः स्वजनपरित्यागस्तु प्रतिज्ञानाटिकायां द्रष्टव्यः ।

पद्मावती—(क) होदव्वं ।

चेटी—(ख) भट्टिदारिए ! साहु भत्तारं भणाहि—अहं पि वीणं सिक्खिस्सामि त्ति ।

पद्मावती—(ग) उत्तो मए अय्यउत्तो ।

वासवदत्ता—(घ) तदो किं भणिदं ?

---

(क) भवितव्यम् ।

(ख) भर्तृदारिके ! साधु भर्तारं भण—अहमपि वीणां शिक्षिष्य इति ।

(ग) उक्तो मयार्यपुत्रः ।

(घ) ततः किं भणितम् ?

---

स्वजनपरित्यागेन हेतुना प्रेमाधिक्यं कल्पयितुं युज्यत इत्याह पद्मावती—होदव्वं इति । अनेनेति कर्तुराक्षेपः । एतत्त्वदुक्तं सम्भवतीत्यर्थः ।

'भर्तुर्वीणावादनकौशलं शिक्षित्वा यथा वासवदत्ता भर्तृवल्लभा सञ्जाता, तथा त्वमपि तत्कौशलशिक्षणेन भर्तुः प्रीतिपात्रतामधिगन्तुं चेष्टस्वे'त्याशयेन वचनं प्रयुंक्ते पद्मावतीमुद्दिश्य चेटी—भट्टिदारिए ! इति । साधु सम्यक्, सादरमित्यर्थः । 'अहमपी'त्यपिशब्दो 'वासवदत्तेवे'त्यर्थं बोधयति । वीणां वीणावादनम् । 'वासवदत्ता यथा वीणावादनं शिक्षिता भवता, तथाऽहमपि तदिदं शिक्षणीयास्मी'ति राजकन्यया श्रीमत्या सादरं प्रार्थनीयस्तत्रभवान् भर्ता ।

स्वकृतां तद्विषये तत्प्रार्थनां सूचयति पद्मावती—उत्तो इति । आर्यपुत्रमहं तदर्थं प्रार्थितवतीत्यर्थः ।

ततः स हि तदुत्तरं किमाचष्टेत्याह वासवदत्ता—तदो इति । अत्र 'तेने'-

---

पद्मा०—हो सकता है ।

दासी—राजकुमारी ! पति से अच्छे ढंग से कहना कि मैं भी बीन सीखूंगी ।

पद्मा०—मैंने आर्यपुत्र से कहा था ।

वासव०—तब उन्होंने क्या कहा ?

पद्मावती--(क) अभणिअ किञ्चि दिग्घं णिस्ससिअ तुह्णीओ संवुत्तो ।

वासवदत्ता— (ख) तदो तुवं किं विअ तक्केसि ?

पद्मावती—(ग) तक्केमि अय्याए वासवदत्ताए गुणाणि

---

(क) अभणित्वा किञ्चिद् दीर्घं निःश्वस्य तूष्णीकः संवृत्तः ।
(ख) ततस्त्वं किमिव तर्कयसि ?
(ग) तर्कयाम्यार्याया वासवदत्ताया गुणान् स्मृत्वा दक्षिण-

---

त्यार्थः कर्ता। प्रश्नोऽयं वासवदत्तायाः स्वविषयकप्रियप्रेमपरीक्षाभिलाषिण्यास्तदुत्तरवचनश्रवणकौतूहलमाविष्कुरुते ।

वासवदत्ताप्रश्नमेनं निशम्य पद्मावती ब्रूते—अभणिअ इति। तूष्णीकस्तूष्णींशीलः, मौनीति यावत्। आर्यपुत्रेण तु मदीयं तत्प्रार्थनावचनमाकर्ण्य तदुत्तरं किमप्यनुक्त्वा दीर्घं निःश्वसता केवलं मौनमेवाऽवलम्बितम्। एतेन च तात्कालिकतदवस्थाप्रदर्शनेन वासवदत्तागतशिष्यजनोचितगुणस्मरणमहिम्ना स्नेहवात्सल्यवशाद्वत्सराजस्य चित्ते दत्तपदो विषादभावोदयो व्यक्तीकृतः ।

तत्र किल पद्मावत्या मानसं तर्कं जिज्ञासुर्वासवदत्ता पुनराह—तदो इति। ततः तत्र, सप्तम्यां तसिः। इवेति पदप्रयोगो वाक्यसौन्दर्यं दर्शयितुम्, तर्कयसि अनुमानं करोषि। तत्र तावद्भर्तृकृते दीर्घनिःश्वासे मौनधारणे च कीदृशं तवानुमानम् ? किमत्र कारणं सम्भावयसि त्वम् ?

तद्विषये स्वकीयं दर्शयति तर्कं पद्मावती-तक्केमि इति। दक्षिणतया औदार्येण, रोदितीति लड् भूतार्थे। एतदेवात्रानुमिनोम्यहं यदेतं मत्कृतवीणावादनशिक्षणप्रस्तावमुपलभ्य तदानीं तत्र विषये पूर्वं दत्तशिक्षणाया वासवदत्तायाः श्लाघनीयगुणानां स्मरणात्तस्य तादृगवस्थया भवितुं

---

पद्मा०—बिना कुछ कहे ही ऊँची साँस लेकर चुप हो गये ।
वासव०—उसपर तुम क्या अनुमान करती हो ?
पद्मा०—आर्या वासवदत्ता के गुणों का स्मरण कर चतुरता के कारण मेरे आगे

सुमरिअ दक्खिणदाए मम अग्गदो ण रोदिदि त्ति ।

वासवदत्ता—[ आत्मगतम् ] (क) धण्णा खु म्हि, जदि एव्वं सच्चं भवे ।

[ ततः प्रविशति राजा विदूषकश्च । ]

विदूषकः—(ख) ही ही । पचिअपडिअबन्धुजीवकुसुम-

---

तया ममाग्रतो न रोदितीति ।

( क ) धन्या खल्वस्मि, यद्येवं सत्यं भवेत् ।

( ख ) ही ही ! प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयं

---

युज्यते । उदारतया च मत्पुरो नारोदीत्सः । अन्येन च केनापि तादृश्यां दशायां शोकावेगवशात्सम्भवन्तमश्रुपातं निरोद्धुं न कदापि प्रभूयेतेति भावः। "जानात्यसौ पद्मावती वासवदत्तायां निरतिशयं प्रेमभावं भर्तुः । चातुर्येण च तस्यां भर्तुरवस्थायां स्वकीयमीर्ष्यात्मकं मानसं भावमप्रकाश्य वासवदत्तायाः प्रसत्तये पूर्वोक्तमात्मनोऽनुमानं तां पुरः प्राकाशय"दित्यत्रास्ति रहस्यम् ।

पद्मावत्या वितर्कितमेतदाकर्ण्य धन्यंमन्या वासवदत्ता स्वगतं भाषते—धण्णा इति। एवं पद्मावतीवितर्कितम् । पद्मावत्या अनुमानमिदं वास्तवरूपतां चेत्कलयेत्तर्हि निःसन्देहमधुना धन्यास्मि संवृत्ता । अन्यूनाऽनुस्यूतनिःसामान्यपतिप्रेमसम्भावनयाऽनया नूनं मे जीवनमेतर्हि फलेग्रहितां कलयतीत्याशयः ।

अथेदानीं पद्मावतीं प्रेयसीमन्विष्यतो वत्सराजस्य राज्ञः सुहृदा विदूषकेण सह प्रमदवनप्रवेशं दर्शयति कविः—ततः प्रविशतीति ।

समयोचितं तत्र विदूषको वचनमुद्गिरति—ही ही इति । 'हीही'त्यय-

---

नहीं रोए—ऐसा मैं समझती हूं ।

वासव—( स्वगत ) यदि यह सत्य है, तो मैं धन्य हूं ।

( तब राजा और विदूषक आते हैं ) ।

विदू०—अहाहा ! बटोरने पर भी थोड़े २ गिरे हुए दुपहरिया फूलों से यह नज़र

विरलत्वाद्रमणिज्जं पमदवणं । इदो दाव भवं ।

राजा--वयस्य ! वसन्तक ! अयमयमागच्छामि ।

कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते

दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः ।

---

प्रमदवनम । इतस्तावद् भवान् ।

---

मानन्दसूचको ध्वनिविशेषः । प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयं, प्रचितान्यवचितानि पतितानि च यानि बन्धुजीवकुसुमानि 'दुपहरिया'-इत्याख्याप्रसिद्धबन्धूकपुष्पाणि तेषां विरलेनेतस्ततः पातेन हेतुना रमणीयं सुन्दरम्, दृश्यत इति शेषः । अवचयावशिष्टानि बन्धूककुसुमान्यत्रेतस्ततः पतितानि वर्तन्ते । तेन प्रमदवनस्यैतस्य सौन्दर्यं चित्तमासिञ्चतीत्यर्थः । मार्गं दर्शयन् राजानमाह—इदो इति । इतः दृश्यमानादस्मात्प्रदेशात्, तावद्वाक्यसौन्दर्ये । 'आगच्छतु' इति शेषः । अमुना मत्सूचितेन मार्गेण भवताऽऽगन्तव्यमधुनेत्यर्थः ।

तदनु राजाऽभिधत्ते-वयस्येति । अत्र 'अयमय'मिति द्विरुक्तिरियमुद्दीपनसाधनप्रमदवनकमनीयताविलोकनसम्भवोत्कलिकाकुलस्य राज्ञो वासवदत्तावियोगवैकल्यं पद्मावतीदर्शनस्पृहयालुतां च द्योतयति । अयि! मित्र! वसन्तक ! एषोऽहं त्वत्सूचितं पन्थानमनुसरामीत्यर्थः ।

तदेवात्मनो मदनज्वरवैकल्यमभिधावृत्त्या बोधयति विदूषकं राजा—कामेनेति । तदा प्रद्योतनृपतेः सचिवेन कृतस्य मे निग्रहस्य* समये उज्जयिनीम् अवन्तिराजनगरीं गते प्रयाते, अवन्तिराजतनयां वासवदत्तां स्वैर-

---

बाग सुन्दर दिखाई दे रहा है। आप इधर से आइये ।

राजा—मित्र ! वसंतक ! यह, यह मैं आया ।

उस समय जब मैं उज्जैन में गया और अवन्तिराज-तनया वासवदत्ता को पूरी तरह से देख कर जब कि मेरी विचित्र दशा हो रही थी, कामदेव ने अपने पांचो

---

* स्पष्टं चेदं प्रतिज्ञायौगन्धरायणे ।

तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ? ॥ १ ॥

---

मिच्छानुसारं दृष्ट्वा नयनपदवीं नीत्वा कामप्यनिर्वाच्यामवस्थां मोहमयीं दशां गते प्राप्ते, मयि मदन्तरिति यावत्, कामेन मन्मथेन पञ्च तत्संख्याका इषवो बाणाः पातिताः प्रतिरोपिताः निखाता इत्यर्थः । 'पञ्चबाणेन प्राप्तवासवदत्तादर्शने राजनि पञ्चापि बाणाः प्रयुक्ता' इत्यनेन राज्ञो मनसि तदा वासवदत्ताविषयप्रेमोत्पत्तेः परा काष्ठा सूचिता । अद्यापि ततश्चिरतिथे समयेऽतिगतेऽपि हृदयं मदीयं मनस्तैः कामप्रयुक्तैर्घातकैः पञ्चभिर्बाणैः सशल्यं कीलितमेव वर्तते, भूयश्च पुनरपि, पद्मावतीं विषयीकृत्येत्यर्थः, वयं विद्धा अहं ताडितोऽस्मि, 'अस्मदो द्वयोश्चे'ति बहुत्वम् । पञ्चापि ते बाणा अद्यावधि मद्धृदये लग्ना एव सन्ति, हा ! हन्त ! ततोऽप्यपरितुष्यता निष्करुणेन कामेन पुनरिदानीं मयि वेधनमारब्धमिति भावः । किन्तु, यदा यदि मदनः कामः पञ्चेषुः, पञ्चेषवो बाणा यस्येत्येतादृशः प्रसिद्धः, तर्हि तेन षष्ठः पञ्चातिरिक्तः षष्ठसंख्याकः, अयं व्यथयन्निति यावत्, शरो बाणः कथं कुतः पातितः प्रक्षिप्तः, अर्थान्मयि । पञ्चबाणेन पञ्चापि बाणान्निपात्य निःशेषितबाणेन सता मयि पातयितुमिदानीं पुनरयं षष्ठो बाणः कुत आनीतः । शरैरसंख्यैर्विध्यतस्तस्य पञ्चबाणता विस्मयं जनयतीति भावः । वस्तुतस्तु–पञ्चबाणपदे पञ्चशब्दो विस्तारवचनः । पञ्च विस्तृता असंख्या इति यावत्, बाणा यस्येति विग्रहः । एवं च न कोऽप्यत्र विरोधः । ''परप्रेमास्पदवासवदत्तावियोगवैश्वानरोऽद्यापि ज्वलयत्येव माम् । पुनरियमपरापि पद्मावतीविषयिण्युत्कटोत्कण्ठा सम्प्रत्यतीव व्याकुलीकरोति मे मानसम् । अहो ! दुर्दैवान्महति सङ्कटे सम्पतितोऽस्मी''ति चिन्ताभावमन्तर्नाटयति राजा । अत्र वृत्तं शार्दूलविक्रीडितम्, लक्षणं चास्य दर्शितचरम् ॥ १ ॥

---

बाण मेरे ऊपर गिराये । उनसे मेरा हृदय अभी तक निष्कंटक नहीं ही हुआ कि फिर भी हम बेधे गये । जब कि कामदेव के पांच ही बाण हैं, तो यह छठा बाण उसने कहाँ से फेंका ।

विदूषकः—(क) कहिं णु खु गदा तत्तहोदी पदुमावदी, लदामण्डवं गदा भवे, उदाहो असणकुसुमसञ्चिदं वग्घचम्मावगुण्ठिदं विअ पव्वदतिलअं णाम सिलापट्टअं गदा भवे, आदु

---

(क) कुत्र नु खलु गता तत्रभवती पद्मावती, लतामण्डपं गता भवेद्, उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितमिव पर्वततिलकं नाम शिलापट्टकं गता भवेद्, अथवा अधिककटुकगन्धसप्त-

---

प्रियतमादर्शनोत्कण्ठितं सुहृदं राजानमभिलक्ष्य पद्मावतीविषये विविधान् वितर्कानुपक्षिपति विदूषकः—कहिं णु खु इति। लतामण्डपं समन्ततो लताभिराच्छन्नं स्थलं कुञ्जमिति यावत्। क्व तावत्पूज्या पद्मावती प्रस्थिता भवेत्? कुञ्जं गता स्यादित्येको वितर्कः। वितर्कान्तरमाह—उदाहो इति। उताहो अथवा, 'आहो उताहो किमुत' इत्यमरः, असनकुसुमसञ्चितम्, असनानां सर्जकवृक्षाणां, 'सर्जकाऽसनबन्धूके'त्यमरः, सुमैः पुष्पैः सञ्चितं व्याप्तम्, अत एव व्याघ्रचर्मावगुण्ठितं शार्दूलचर्माच्छादितमिव, तद्वत्प्रतीयमानमिति यावत्, पर्वततिलकं नाम तन्नामधेयं पर्वतशिखरं तिलकस्योर्ध्वस्थानीयत्वादत्र तत्पदेन शिखरं गृह्यते, शिलापट्टकम्, उपवेशनयोग्यं चतुष्कोणं शिलाखण्डम्। व्याघ्रचर्माणीव प्रतीयमानानि सर्जकपुष्पाणि यत्र भूयः समन्तात्प्रसृतानि वर्तन्ते, तादृशं शैलशिखरस्थं पर्वततिलकनामकं शिलाशकलमुपवेष्टुं प्रयाता स्यात्किमु? पुनस्तृतीयं वितर्कं दर्शयति—आदु इति। अधिककटुकगन्धसप्तच्छदवनम्, अधिकं कटुकोऽतिकटुर्गन्ध आमोदो येषां तादृशां सप्तच्छदानां सप्तपर्णवृक्षाणां वनं तत्प्रचुरं स्थलमिति यावत्, प्रविष्टा तदन्तर्गता। प्रसूनोदयोद्भूदामोदसारसप्तपर्णपादपव्राताऽऽवृतस्थलविशेषमाश्रिता वा स्यात्?

---

विदू०—माननीया पद्मावती कहां भला गई, कुंज में गई हों, अथवा बाघ की खाल से मढ़े हुए की भांति रंग बिरंगी असन के फूलों से लदे हुए पर्वततिलक नामक पत्थर की चौकी पर गई हों, या उत्कट-गन्धवाली छतिवन (सप्तपर्ण) के बन में गई हों,

अधिअकडुअगन्धसत्तच्छदवणं पविट्ठा भवे, अहव आलिहिदमिअ-पक्खिसङ्कुलं दारुपव्वदअं गदा भवे। [ऊर्ध्वमवलोक्य] ही ! ही ! सरअकालणिम्मले अन्तरिक्खे पसारिअबलदेवबाहुदंसणीअं सारस-पन्तिं जाव समाहिदं गच्छन्तिं पेक्खदु दाव भवं।

---

च्छदवनं प्रविष्टा भवेद्, अथवा आलिखितमृगपक्षिसङ्कुलं दारुपर्वतकं गता भवेत्। ही! ही! शरत्कालनिर्मलेऽन्तरिक्षे प्रसारितबलदेवबाहु-दर्शनीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीं पश्यतु तावद् भवान्।

---

चतुर्थमन्यं वितर्कं कलयति—अहव इति। आलिखितमृगपक्षिसङ्कुलम्, आलिखितैश्चित्ररूपेण विन्यस्तैः मृगैः पशुभिः पक्षिभिश्च सङ्कुलं पूर्णम्, दारुपर्वतकं काष्ठनिर्मितां पर्वतप्रतिकृतिम्, 'इवे प्रतिकृता'विति कन्। चित्रलिखिता यत्र भूयांसः पशुपक्षिणो विलसन्ति, तं कृत्रिमकाष्ठमयपर्वतं प्रस्थिता भवेत्किंवा? एतादृशो विकल्पानुद्भाव्य सुहृन्मनोविनोदाय विषया-न्तरमाश्रयन् दत्तोर्ध्वदृष्टिः सन् वदति—ही ही इति। ही हीति प्रसन्नता-सूचकम्। अत्र वाक्ये यावत्तावत्पदे वाक्यालङ्कृतये प्रयुक्ते। अन्तरिक्ष आकाशे, प्रसारितबलदेवबाहुदर्शनीयाम्, प्रसारितौ विस्तारितौ बलदेवस्य बलरामस्य बाहू भुजाविव दर्शनीयां सुन्दरीम्, 'पसादिअ' इति पाठे प्रसादितौ प्रसादं नैर्मल्यं प्रापिताविव्यर्थः। समाहितं सावधानं सम्यग्-रूपेण सुन्दरं यथा स्यात्तथा गच्छन्तीं चलन्तीं, सारसपंक्तिं सारसाख्य-पक्षिविशेषश्रेणिम्। शरत्समयनिर्मलाकाशप्रदेशशालिनां पंक्तिबन्धेन सुन्दरं गच्छतां बलदेवबाहुसदृक्षाणां सारसपक्षिणां यूथं दृश्यतामिदानीं भवता।

---

किंवा जहां पशु और पक्षियों के चित्र लिखे हैं, उस लकड़ी के पहाड़ पर गई हों। [ ऊपर देखकर ] अहा हा ! शरद ऋतु के कारण निर्मल आकाश में फैलाई हुई बल-रामजी की भुजाओं की तरह सुन्दर सारस–पक्षियों की इस पांति को आप देखें कि वह कैसी सुन्दरता से जा रही है।

राजा—वयस्य ! पश्याम्येनाम्,

ऋज्वायतां च विरलां च नतोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु ।
निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवाम्बरतलस्य विभज्यमानाम् ॥ २ ॥

---

कथमेतन्मनोहरं दृश्यते । तदिदमक्ष्णोर्लक्ष्यतामानीय क्षणं मनो विनोदनीयं नेत्रे च सफलयितव्ये इति भावः ।

ततो राजा ब्रूते—वयस्येति । विदूषकदर्शितां सारसश्रेणिमुद्दिश्य 'एना'मिति निर्देशः । अन्वादेश इदम एनादेशः । मित्र ! विलोकयेऽहं त्वत्सूचितां सारसपंक्तिमिमां गगनाङ्गणे ।

निगद्येदं तामेव सारसपंक्तिं विवर्णयिषुर्विशिनष्टि पद्येन—ऋज्वायतामिति । अत्र पूर्वार्धे चत्वारश्चकाराश्चत्वारि विशेषणानि समुच्चिन्वन्ति । ऋज्वायताम् , ऋजुः सरलाऽऽयता दीर्घा च तां घनामिति यावत् , विरलां क्वचन मध्ये मध्ये स्थितां, नता च उन्नता च तां नतोन्नतां बन्धुरां नीचोच्चप्रदेशेषु विद्यमानां, निवर्तनेषु वामदक्षिणयोस्तिर्यग् विवलनेषु सप्तर्षिवंशकुटिलां, सप्तर्षिवंशस्तदाख्यतारकामण्डलं तद्वत्कुटिलां वक्राकारेण स्थिताम् । पुनस्तामेवोत्प्रेक्षते--निर्मुच्यमानेति । निर्मुच्यमानो मुच्यमानकञ्चुकः कञ्चुकहीन इति यावत्, यो भुजगः सर्पः तदुदरवन्निर्मलस्य स्वच्छस्य, अम्बरतलस्य गगनाङ्गणस्य, विभज्यमानां क्रियमाणविभागां घनविरलत्वा-

---

राजा—मित्र ! इसे देखता हूं,

यह कहीं सीधी है, कहीं फैली है, कहीं विरल है और ऊँची नीची है। जब कहीं मुड़ती है तो ठीक सप्तर्षियों के मण्डल की भांति टेढ़ी मेढी भी हो जाती है। अत एव तत्काल ही केचुली छोड़ने वाले सांप के पेट की तरह निर्मल और स्वच्छ आकाश की पृथक् और स्पष्ट होने वाली सीमा की भांति प्रतीत होती है।

चेटी—(क) पेक्खदु पेक्खदु भट्टिदारिआ एदं कोकणद-मालापण्डररमणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं ।

---

(क) पश्यतु पश्यतु भर्तृदारिका एतां कोकनदमालापाण्डर-रमणीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीम् । अहो ! भर्ता ।

---

द्रिरूपेण पार्थक्यं दर्शयन्तीं, सीमां मर्यादां विभागसूचिकां रेखामिव प्रतिभान्तीम्, एनां पूर्वोक्तां गगनस्थां सारसपंक्तिमहं पश्यामी'ति पूर्वेणान्वयः । सारसपंक्तिश्चेयं गगनभागे गतिविशेषकौशलं दर्शयन्ती क्वचिद् घना क्वचिद्विरला क्वचनोन्नता क्वचिच्चावनता दृश्यते । यदा च कुत्रचित्पार्श्वतो विवलनं कुर्वती कुटिलां गतिमालम्बते, तदा तु वक्रसन्निवेशेन सप्तर्षितारकामण्डलेन सादृश्यं लभते । शङ्के च गगनस्य मानसूचिका विभागप्रदर्शिका सेयं सीमेव समुद्भासत इति । अत्र च शरत्समागमान्निर्मलं मेघनिर्मुक्तमाततं चाकाशं निर्मुक्तसर्पोदरेणानुमितं कविना । वसन्ततिलकानामकं वृत्तम्, लक्षणमुक्तं प्रागदसीयम् ॥ २ ॥

इतो राजा विदूषकसूचनानुसारं सारसावलिमित्थं वर्णयति । ततश्च पूर्वतः प्रविष्टा चेट्या समं सवासवदत्ता पद्मावती प्रमदवनैकदेशे यथासुखं पर्यटन्ती वर्तते । तत्र तावच्चेटी तामेव सारसपंक्तिं गगनाङ्गणभूषायमाणामुद्वीक्ष्य राजकुमारीं पद्मावतीं प्रतीत्थं तन्निरीक्षणमुद्दिश्य वचोऽभिधत्ते—पेक्खदु इति । अत्र 'पश्यतु पश्यतु' इत्यसौ द्विरुक्तिरादरार्था । कोकनदमालापाण्डररमणीयाम्, कोकनदानां श्वेतकमलानां माला पंक्तिः स्रग् वा सेव पाण्डरा श्वेता रमणीया मनोहरा च ताम्, 'विशदश्वेतपाण्डराः' इत्यमरः । इदं च सारसपंक्तेर्विशेषणम् । यद्यपि 'रक्तोत्पलं कोकनद'मिति कोषानुरोधात्कोकनदशब्दो रक्तकमलार्थस्य वाचको विद्यते, तथापि प्रसङ्गा-

---

दासी—राजकुमारी ! देखिये, श्वेतकमल की माला के समान धवल और सुन्दर तथा सावधानी से जाती हुई इस सारसों की पंक्ति को देखिये । अरे ! स्वामी आ पहुँचे ।

अम्मो ! भट्टा ।

पद्मावती—(क) हं ! अय्यउत्तो । अय्ये ! तव कारणादो अय्यउत्तदंसणं परिहरामि । ता इमं दाव माहवीलदामण्डवं

---

(क) हम् ! आर्यपुत्रः। आर्ये ! तव कारणादार्यपुत्रदर्शनं परिहरामि । तदिमं तावन्माधवीलतामण्डपं प्रविशामः ।

---

नुराधाद्‍औचित्याच्च सोऽयं श्वेतकमलरूपमर्थं बोधयत्यत्र । यावत्पदं वाक्यालङ्कृतौ । 'समाहितं गच्छन्ती'मित्यस्यार्थः प्रागुक्तः । श्वेतकमलमालेव श्वेततां सुन्दरतां च बिभ्राणा सारसश्रेणिरियं गतिविषये सौष्ठवं प्रकटयन्ती दर्शनपथातिथितां नेतव्या सादरगौरवमिदानीं श्रीमत्या राजकुमार्येत्यर्थः । इतस्ततोऽक्षिणी निक्षिपन्ती तदनु सहसा तत्रैव समीपे भर्तृदारिकायाः पद्मावत्याः प्रियतमं नायकमवलोक्य तां दर्शयन्ती साश्चर्यमाह—अम्मो इति । भर्ता पतिः, अर्थात्पद्मावत्याः । अत्रोपगत इति शेषः । अयं तावद्भर्तृदारिकायाः प्राणप्रियः प्रियः प्रदेशेऽस्मिन् समागतः । किमधुना प्रतिपत्तव्यमस्माभिरिति भावः ।

प्रियदर्शनाल्लज्जमाना ससङ्कोचं वदति पद्मावती--हं इति । हमिति ध्वनिः सङ्कोचमन्तर्गतं ध्वनयति । अहो ! श्रीमान् पतिदेवोऽयमत्रैवोपगत इत्यर्थः । ततस्तदानीं करणीयं निवेदयति वासवदत्ताम्—अय्ये इति । तव कारणात् त्वदर्थम्, आर्यपुत्रदर्शनम् आर्यपुत्रकर्तृकमस्मत्कर्मकं दर्शनम् परिहरामि वर्जयामि । अयि ! मान्ये ! त्वं तावत्परपुरुषं द्रष्टुं नेहसे, भर्ता च मे समीप एव सम्प्रति वर्तते । दैववशादुपस्थितस्यैतस्य दर्शनं तु परं स्पृहयाम्यहम् । परमस्माकं तत्सांमुख्ये सति सञ्जाते ते नियमो भज्येत । अतस्तदर्थं कमप्युपायमाचरामि, यथा सोऽयमस्मान् विलोकयितुं न पारयेदित्याशयः । तमेव चिन्तितमुपायं दर्शयति--ता इति । तत् तस्मात्कारणात्, तावच्छब्द एवार्थकः । इमं समीपतो दृश्यमानम् । आर्यपुत्रदर्शनं

---

पद्मा०—हां, आर्यपुत्र हैं । आर्ये ! तुम्हारे लिये आर्यपुत्र के दर्शन को त्यागती हूं, तो इस माधवीलता के मंडप में जांय ।

पविसामो ।

वासवदत्ता—(क) एव्वं होदु ।

[ तथा कुर्वन्ति । ]

विदूषकः—(ख) तत्तहोदी पदुमावदी इह आआच्छिअ णिग्गदा भवे ।

---

( क ) एवं भवतु ।

( ख ) तत्रभवती पद्मावतीहागत्य निर्गता भवेत् ।

---

परिहर्तुं वासन्तीलताकुञ्जमेव समीपवर्तीदं प्रविश्यतामस्माभिः । कुञ्जेऽस्मिन् प्रविष्टा वयं प्रच्छन्नरूपेण स्थितास्तद्विलोचनपथस्य नैवातिथीभविष्याम इत्यतस्तदेव सत्वरं शरणीकरणीयमिति भावः । एवं किल करणे पद्मावत्या मानसं तात्पर्यमेतदप्यासीद् , यदत्र गूढं स्थितया मया निर्बाधं विस्रम्भभाषितं भर्तुः श्रोतुं लभ्येत ।

संमतिमत्रार्थे दर्शयत्यात्मनो वासवदत्ता--एव्वं इति । एवं कुञ्जेऽत्र प्रवेश इति यावत् । सुष्ठूक्तं त्वया, समयोचितं वासन्तीकुञ्जं गच्छामेत्यर्थः

तत्र तासां सर्वासां प्रवेशमाह--तथा कुर्वन्तीति ।

पद्मावत्या इत्थं लताकुञ्जप्रवेशं प्रदर्श्य प्रियाविरहकातरस्य राज्ञो वृत्तं वर्णयिष्यन्विदूषकोक्तिमवतारयति कविः--तत्तहोदी इति । अयि ! मित्र ! प्रदेशमिममालक्ष्य समयेऽस्मिन्ननुमानमेवं भवति मे, यदत्र पद्मावत्या श्रीमत्या समागत्य कियच्चिरं भवत्प्रतीक्षया स्थित्वा ततो निराशया प्रस्थितं स्यादित्यर्थः । राज्ञः कृते चिरात्पद्मावत्या मार्गणे लग्नो विदूषकः क्वापि तामपश्यन्नत्र तदागमनचिह्नं किञ्चिदुपलभ्य तदौपयिकं सतर्कं वचनमिदं प्रायुङ्क्त।

---

वासव०—ऐसा ही हो ।

[ लतामंडप में प्रवेश करती हैं ]

विदू०—माननीया पद्मावती यहाँ आकर चली गई होंगी ।

राजा—कथं भवान् जानाति ?

विदूषकः—(क) इमाणि अवइदकुसुमाणि सेफालिआ-गुच्छआणि पेक्खदु दाव भवं ।

राजा—अहो ! विचित्रता कुसुमस्य वसन्तक !

---

( क ) इमानपचितकुसुमान् शेफालिकागुच्छान् प्रेक्षतां तावद् भवान् ।

---

निशम्येदं वचो राजा तं पृच्छति—कथमिति । कथं केन लक्षणेनेति यावत् । पद्मावत्या इहागमनमितो निर्गमनं च पुनः केन लक्षणेन ज्ञायते त्वया ? पूर्वोक्तानुमानसाधकोऽत्र कस्तावत्तवानुकूलस्तर्कः ?

तदेव स्वकीयानुमानकारणं प्रकाश्यते विदूषकेण—इमाणि इति । अत्र शेफालिकागुच्छकानुद्दिश्य तत्रापचितकुसुमत्वं विधेयम् । अपचित-कुसुमानि, अपचितानि विध्वंसितानि त्रोटितानीति यावत् कुसुमानि येभ्य-स्तानि, गुच्छः स्तबकः, स्वार्थे कः, 'स्याद् गुच्छकस्तु स्तबकः' इत्यमरः । तावदिति वाक्यालङ्कारे । इदमिदानीं निरूपयतु श्रीमान्, यदमीभ्यः शेफा-लिकाप्रसूनस्तबकेभ्यः प्रसून्यान्यपगतानि सन्ति । श्रीमतीं पद्मावतीं विना प्रमदवनादस्मात्पुष्पाणि केनापि न शक्यन्ते ग्रहीतुम् । अतस्तदागमन-मत्राहं तर्कयामीति भावः ।

विदूषकीयैतत्तर्कविषये किमप्यनुक्त्वा मनसैव तत्रानुमतिं कलयंस्तत्र-त्यप्रसूनसौन्दर्यं प्रशंसति राजा—अहो इति । विचित्रता अनेकवर्णता सुन्दर-तेति यावत्, दृश्यत इति शेषः । कुसुमस्येति जातावेकवचनम् । अयि ! सखे ! वसन्तक ! कथमेतानि पुष्पाणि विचित्राणि मनोहारीणि दृश्यन्ते ?

---

राजा—तुम कैसे जानते हो ?

विदू०—आप इन हरसिंगार के गुच्छों को देखें, जिनमें से कुछ फूल चुन लिये गये हैं ।

राजा—वसन्तक ! क्याही रंग विरंगे फूल हैं ।

**वासवदत्ता**—[ आत्मगतम् ] (क) वसन्तअसङ्कित्तणेण अहं पुण जाणामि उज्जइणीए वत्तामि त्ति ।

**राजा**—वसन्तक ! अस्मिन्नेवासीनौ शिलातले पद्मावतीं प्रतीक्षिष्यावहे ।

---

( क ) वसन्तकसङ्कीर्तनेनाहं पुनर्जानामि उज्जयिन्यां वर्त इति ।

---

विदूषकमुद्दिश्य नायकेनाचरितपूर्वं 'वसन्तके'ति सम्बुद्धिपदमुज्ज-यिन्यां स्थितिसमये बहुशः श्रुतमासीद्वासवदत्तया । अद्य चिरात्तदेव तं प्रति सम्बोधनं नायककृतं निशम्य तया पुरातनसमयस्मरणं कुर्वत्या विमोहेन स्वगतं चिन्त्यते—वसन्तअ इत्यादि । सङ्कीर्तनं नामग्रहणम् , पुनःपदं वाक्यशोभायाम् , जानामि मन्ये, सम्भावय इति यावत् । प्रियतमेन विहितं वसन्तकनामग्रहणमिदं पूर्वकालिकमुज्जयिनीवासमस्मिन्काले स्मार-यति माम् , तदानीं बहुशस्तथानुभवादिति भावः ।

पुना राजा विदूषकमाह—वसन्तकेति । अस्मिन् समीपवर्तिनि, शिलातले दृषत्फलके । आसीनावुपविशन्तौ, 'आसु उपवेशने' इत्यतः शानचि 'ईदासः' इत्यनेन तस्य ईत्त्वम् । 'प्रतीक्षिष्यावहे' इति विध्यर्थे लृट्, 'प्रतीक्षावहै' इति तदर्थः । एतदेव समीपस्थं दृषत्फलकमुपविशद्भ्या-मावाभ्यां पद्मावती प्रतीक्षणीया । तदागमनमत्र सम्भाव्यते पुनः । अत-स्तावत्कालपर्यन्तमत्रैवावस्थितिरावयोः साम्प्रतमित्याशयः ।

---

वासव०—( स्वगत ) वसन्तक का नाम लेने से तो मुझे मालूम पड़ता है कि मैं उज्जयिनी में ही हूं ।

राजा—वसन्तक ! इसी पत्थर की चौकी पर बैठ पद्मावती की हम लोग प्रतीक्षा करें ।

विदूषकः— (क) भो ! तह । [ उपविश्योत्थाय ] ही ! ही ! सरअकालतिक्खो दुस्सहो आदवो । ता इमं दाव माहवीमण्डवं पविसामो ।

---

(क) भोस्तथा । ही! ही! शरत्कालतीक्ष्णो दुस्सह आतपः। तदिमं

---

मित्रवरेण राज्ञा चिकीर्षितं शिलातलोपवेशं प्रति स्वीयामनुमतिं प्रदर्शयन् ब्रूते विदूषकः--भो इति । तथा साधु । राजन् ! भवत्प्रस्तावोऽयमनुमोद्यते मया, अतः शिलातलेऽस्मिन्नुपवेष्टव्यमित्यर्थः । ततस्तत्र शिलातले किञ्चित्कालमुपविश्य शारदातपसन्तापमनुभवन्नुत्थाय पुनराह-हीही इति । हीहीति दुःखसूचकम् । शरत्कालतीक्ष्णः शरत्समयसम्बन्धात्तीव्रः, अत एव दुःसहः दुःखेन सोढुं शक्यः, 'ईषद्दुःसुषु' इत्यादिना खल् । तदित्यव्ययं हेत्वर्थे, तावदिति वाक्यालङ्कृतौ । 'प्रविशाम' इति लटः प्रयुक्तिर्विध्यर्थे । हन्त ! बाधन्ते भृशं कटुतराः शारदाऽहस्करांशवः सम्प्रति । अत्र किलातपतापान्न स्थातुं शक्यते । अतः सन्निकृष्टैतद्वासन्तीलताकुञ्जान्तरेव गन्तव्यमिति भावः । अत्र वर्षापगमादनन्तरमुल्लसतः शारदोष्मणस्तापकारित्वं त्वनुभवसंवेद्यम् । अस्य च ग्रीष्मोष्मण इवातीव दुःसहत्वं नास्ति, परं तदपेक्षया किञ्चिन्न्यूनं दुःसहत्वं तावन्नापरोक्षम् । केचिदत्र महानुभावाः—प्रमदवने च्छायाबहुले ऊष्मण उपलम्भविषये सम्भवत्कारणान्तरमूहितुमशक्नुवता विदूषकेण तत्रोष्मणि कृते दुःसहातपजनितत्ववर्णनेऽस्मिन्नसङ्गतत्वं भण्डतानुरूपतया च कल्पितत्वं स्वव्याख्यायामुल्लिखन्ति । तत्र तावद्विचारणीयं सहृदयैः—यदि नाम शिलातले दुःसहोष्णतासद्भावमुद्दिश्य राज्ञा ततः प्रदेशान्तरगमनप्रस्तावोऽकरिष्यत, विदूषकेण पुनस्तत्र वियोगजनितत्वादिकारणान्तरं तर्कयितुमपारयता मन्दबुद्धिना सौरातपजनितत्वमकल्पयिष्यत; ततो जातु विदूषकोक्तौ तस्यामसङ्गतत्वेन भण्डतानुरूपकल्पनारोपेण च पूर्वोक्तेन सङ्गतेनाऽभाविष्यत । अत्र तु नैता-

---

विदू०—जी ! ठीक है । ( बैठ और फिर उठकर ) ही ! ही !! शरद्-ऋतु की

राजा—बाढम्, गच्छाग्रतः ।

---

तावन्माधवीमण्डपं प्रविशावः ।

---

इक् प्रसङ्गः । विदूषकेण किल शिलातले समुपविष्टेन शारदातपस्य दुःसहत्वं वर्णयित्वा ततोऽन्यत्र गमनप्रस्तावो राज्ञः पुरस्तादुपस्थापितोऽत्र । इत्थं सति, न ज्ञायते, विदूषकेण सूचितमनुभवगोचरीकृतमूष्मणि दुःसहातपजनितत्वं नाम कारणमसङ्गतं मत्वा महानुभावैस्तत्र तैः कारणान्तरकल्पनायाः का वावश्यकता सम्भाविता ? प्रत्युत सम्भावितं किमपि कारणान्तरमेवाऽसङ्गतं प्रतिभायात्प्रत्यक्षापलापेन । प्रच्छायशीतलप्रमदवनसमीपवर्तिन्यमुष्मिन् शिलातले तादृशातपोपलम्भसम्भवो न्यून एवेति ततः स्थानान्तरप्रस्थानविधौ कारणत्वेन कल्पितामूष्मोपलब्धिमन्तरा कारणान्तरस्य कल्पना तु करणीया स्यात् , किन्तु साप्यापातरमणीयैव नूनम् । नात्रोपलभ्यते पद्मावती, माधवीमण्डपे पुनस्तदवाप्तिः सम्भवतीत्यभिप्रायेण विदूषकेण पद्मावतीवियोगविकलं तत्र स्थले विमनायमानं राजानं सखायमुद्दिश्य ततः स्थानान्तरगमने तदीयवियोगवैकल्यादिकारणप्रदर्शनमनुचितं दुःसाहसं च मन्यमानेन बुद्ध्या तदेव दुःसहातपसन्तापरूपं कारणमुपन्यस्तं पर्यायोक्तविधया । विचित्रवचसो विदूषकस्य दोषबहुलेऽपि वचने क्वचित्कोऽपि कदाचिद् गुणोऽपि सम्भवति । अत्र चेदं व्यङ्ग्यार्थसुन्दरं वचो विदूषकस्य समयोचितकारितां बुद्धिमत्तां च भूयसीमाविष्करोतीत्यलमधुनाऽप्रसक्तानुप्रसक्त्या ।

**बाढमिति** । बाढं शोभनं स्वीकृतमिति यावत् , अर्थात्त्वदुक्तम् । अग्रतो गच्छेति मार्गप्रदर्शनाभिप्रायकम् । अयि ! सखे ! माधवीमण्डपप्रवेशप्रस्तावस्त्वया समाचीनः कृतः, अनुमतोऽयं मे । मार्गप्रदर्शनार्थं पुन-

---

कड़ी घाम असहनीय है। इसलिये इस कुंज के मण्डप में चलें।

राजा—अच्छा, आगे चलो।

विदूषकः—(क) एव्वं होदु ।

[ उभौ परिक्रामतः । ]

पद्मावती—(ख) सव्वं आउलं कत्तुकामो अय्यवसन्तओ ।

---

(क) एवं भवतु ।

(ख) सर्वमाकुलं कर्तुकाम आर्यवसन्तकः । किमिदानीं कुर्मः ।

---

स्त्वमग्रतो गच्छेः, अहन्तु त्वामनुगन्तुमुद्यतोऽस्मीत्यर्थः । मण्डपे तत्र समयेऽस्मिन् समयान्तरे वा पद्मावत्या दर्शनं सम्भवतीति राज्ञा विदूषकोक्तमनुमोदितम् ।

एव्वं इति । 'अग्रतो भूयते मया, त्वया च सखे ! मन्मार्गोऽनुगन्तव्य' इत्येवं विदूषकवचसोऽभिप्रायः ।

उभौ परिक्रामतः इत्यनेन द्वयो राजविदूषकयोर्माधवीलतामण्डपमुद्दिश्य गमनं सूचितम् ।

प्रमदवनमागतं प्रियतमं प्रेक्ष्य पुरा पद्मावती परपुरुषदर्शनं परिहरन्त्या आवन्तिकायाः कृते स्वरूपगोपनक्षमं सह तया माधवीमण्डपं प्रविशति स्मेति पूर्वं प्रतिपादितम् । यदेव राजदर्शनं परिहर्तुं तदानीं तया शरणीकृतमासीत्कुञ्जम् , तत्रापि तदिदानीं दैववशादुपस्थितं भवतीति तत्र स्वकीयप्रयत्नवैफल्यं दर्शयन्ती चिन्तां नाटयति पद्मावती—सव्वं इति । सर्वं पद्मावतीरक्षणौपयिकं मत्कृतं सकलं प्रयत्नमिति यावत् , आकुलं कर्तुकामः विघातयितुं विफलतां नेतुमुद्यतः । मत्समीपे न्यासरूपेण स्थापितायाः 'श्रीमत्या आवन्तिकायाः प्रच्छन्नरूपाया राजदर्शनपरिहारार्थमद्ययावन्मया यो यः प्रयत्न आचरितः, स किल सकलो हन्त ! वैफल्यं नीयते

---

विदू०—ऐसा ही सही ।

( दोनों परिक्रमा करते हैं )

पद्मा०—आर्य वसन्तक सभी ( बना बनाया खेल ) बिगाड़ना चाहते हैं । अब

किं दाणिं करेह्म ?

चेटी—(क) भट्टिदारिए ! एदं महुअरपरिणिलीणं ओलंब-

---

(क) भर्तृदारिके ! एतां मधुकरपरिनिलीनामवलम्बलतामवधूय

---

सम्प्रति कुञ्जेऽस्मिन् राजानं प्रवेशयितुमिच्छता श्रीमद्विदूषकेण । किमधुना विधेयम् ? सहसोपनतमिदं पुना राजदर्शनं परिहर्तुं कस्तावदुपायः समाश्रयणीयः ? अहो ! किङ्कर्तव्यमूढा च बुद्धिर्मे, किमपि समयेऽस्मिन्न स्फुरतीति भावः । सर्वथाऽभीष्टमपि प्रियदर्शनं भविष्यदुपेक्ष्य पुनस्तत्परिहारे किमप्युपायान्तरमन्विष्यन्त्याऽत्र पद्मावत्या सर्वतः स्वात्मनो निक्षेपरक्षणक्षमत्वं स्वीकृतपरिपालनकौशलं च सुस्पष्टं प्रकटीकृतम् ।

करणीयं राजदर्शनपरिहारोपायं दर्शयति चेटी—भट्टिदारिए इति । मधुकरपरिनिलीनाम् , मधुकरा भ्रमराः परिनिलीनाः पुष्परसपानार्थं निश्चलतया समन्ततोऽवस्थिता यत्र ताम् । क्तान्तस्य पूर्वनिपाते युक्तेऽपि परिनिलीनशब्दस्य परनिपातोऽत्र कथञ्चिदग्न्याहितादिवत् समाधेयः । परिनिलीनमधुकरामिति युक्तं पठितुम् । अथवा—मधुकरैः परिनिलीनां व्याप्तामित्यर्थः करणीयः । अवलम्बलताम्, पद्मावत्या इतरासां वा लतानामाश्रयभूतां वल्लीम् । यस्या अधस्तात्पद्मावत्युपविष्टा, यां वावलम्ब्येतरा लता अवस्थिताः सन्ति, तां लतामित्यर्थः । अवधूय कम्पयित्वा, भर्तारं भवत्याः पतिं राजानम् । वारयिष्यामि अर्थात्कुञ्जान्तःप्रवेशात् । अयि ! राजकन्ये ! न किल कोऽपि चिन्ताया अवसरः । मधुपाननिश्चलभ्रमरपूर्णा येयमाश्रयभूता लता वर्तते तामहं कम्पयामि । एतेन तावद् भ्रमरा एकत्रावस्थिताः सर्वतः प्रसरिष्यन्ति । त एव भवदीयं पतिं कुञ्जान्तःप्रवेशोद्यमान्निवारयिष्यन्तीत्यर्थः । परिचालितायां चैतस्यां लतायां तत्र परितः

---

हम लोग क्या करें ?

दासी—राजकुमारी ! भौरों से लदी इस शाखा को, जिसका सहारा आपने

लदं ओधूय भट्टारं वारइस्सं ।

पद्मावती—(क) एव्वं करेहि ।

[ चेटी तथा करोति । ]

विदूषकः—(ख) अविहा अविहा, चिट्ठदु चिट्ठदु दाव भवं ।

---

भर्तारं वारयिष्यामि ।

(क) एवं कुरु ।

(ख) अविह अविह, तिष्ठतु तिष्ठतु तावद् भवान् ।

---

प्रसृत्य प्रवेशमार्गावरोधं करिष्यद्भ्यो भ्रमरेभ्यस्त्रासादेव नूनं भवत्याः पत्या नात्र प्रवेक्ष्यते । तत्तमेवैनमुपायं करोमीति भावः ।

अत्रार्थे संमतिमाह स्वीयां पद्मावती—एव्वं इति । त्वत्सूचितोऽयमुपायः सुन्दरो मयाऽनुमन्यते । एतदेव करणीयं त्वया करणीयमिदानीमित्यर्थः ।

चेटी तथा करोतीति पूर्वोक्तं लताकम्पनं सूचितम् ।

पूर्वसूचितानुसारं माधवीलताकुञ्जाभ्यन्तरं प्रवेष्टुमुद्यतस्तत्र प्रवेशद्वारे भ्रमरबाधामनुभवन् विदूषको राज्ञो गतिं निवारयन् ब्रूते—अविहा इति । अविहेत्यव्ययं विषादसूचकम् । भृशार्थे च तस्यात्र द्विरुक्तिः । 'तिष्ठतु तिष्ठत्वि'ति द्विः प्रयोगः सम्भ्रमं व्यनक्ति, तावद्वाक्यालङ्कृतौ । अहह ! महत्कष्टं समुपस्थितम् । स्वीयां गतिं निरुध्य स्थीयतामत्रैव भवता । न तावदितोऽग्रे समागन्तव्यम् ।

---

वा लताओं ने लिया है, हिलाकर मालिक को ( आने से ) रोकती हूं ।

पद्मा०—ऐसा करो ।

( दासी वैसा ही करती है )

विदू०—हाय ! हाय ! ठहरिये, जरा आप ठहरिये ।

राजा—किमर्थम् ?

विदूषकः—(क) दासीएपुत्तेहि महुअरेहि पीडिदो ह्मि ।

राजा—मा मा भवानेवम् । मधुकरसन्त्रासः परिहार्यः । पश्य,

---

(क) दास्याः पुत्रैर्मधुकरैः पीडितोऽस्मि ।

---

किमर्थमिति । किमिति नाग्रे समागन्तव्यं मया ? 'मद्गतिनिवृत्तौ किं तावदन्तर्गतं ते कारण'मिति तत्कारणं ज्ञातुमिच्छतो विदूषकं प्रति प्रश्नोऽयं राज्ञो निवर्तितगतेः ।

उत्तरं विदूषकस्य तदुपरि—दासीए पुत्तेहि इति । दास्याः पुत्रैरिति निन्दायाम् , नीचैरिति तदर्थः । 'षष्ठ्या आक्रोशे' इत्यनेन चात्र षष्ठीविभक्तेर्न लुक् । अत्र किल परितो भ्रमन्ति भ्रमराः । एते च नीचास्त्रासयन्ति मामित्यर्थः । अत्र दास्याः पुत्रैरित्युक्त्या भ्रमरेषु कोपः सूचितो भवति विदूषकस्य । तेन च—'गतिमस्मदीयां निरुन्धतो बाधमानान्दुष्टानेतान्निवार्यैव शक्यतेऽन्तर्गन्तुम् । अतस्तावदत्रैव तिष्ठतु भवान् , यावदहमेतान्नीचान्निवारयामी'ति विदूषकोक्तेस्तात्पर्यमवगन्तव्यम् ।

भ्रमरोद्भूतां बाधामनुभूय ततो निवारणेन तान् भ्रमरान् बाधितुमिच्छन्तं विदूषकं तदुद्यागान्निवर्तयन् राजा ब्रूते—मा मेति । ब्रवीत्विति शेषः, मा मेति द्विरुक्तिर्निषेधं द्रढयति । इति एवं कोपयुक्तं वचनमिति यावत् । मधुकराणां सन्त्रासो मधुकरसन्त्रासः, अस्मत्कर्तृको मधुकरकर्मकस्त्रासविशेषः । परिहार्यः दूरीकार्यः, न कार्य इति यावत् । भ्रमरेष्वेवं सरोषं वचो न प्रयोक्तव्यं भवता । इतो निवार्य न चैतेऽस्माभिस्त्रासयितव्या इति भावः । तत्र कारणमाह—पश्येति । भ्रमरपीडाया अप्रदाने

---

राजा—क्यों ?

विदू०—इन दुष्ट भौरों से सताया जारहा हूँ ।

राजा—नहीं नहीं, तुम ऐसा न कहो । भौरों को दुख नहीं देना चाहिये । देखो—

मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः ।
पादन्यासविषण्णा वयमिव कान्ताविंयुक्ताः स्युः ॥ ३ ॥

---

वक्ष्यमाणं कारणं जानीहीत्यर्थः । तथाहि—

**मधुमदकला** इति । मधुनः पुष्परसस्य, 'मधु मद्ये पुष्परसे' इत्यमरः, मदः पुष्परसपानजन्मा मानसो विकारविशेषः, तेन कला अव्यक्तमधुराः, अव्यक्तमधुरं यथा तथा कूजन्त इति यावत्, तथा मदनार्ताभिः कामाकुलाभिः प्रियाभिर्भ्रमरीभिः उपगूढाः आश्लिष्टाः । विशेषणद्वयेन चैतेन भ्रमराणां परमानन्दमग्नानां वियोजने कारणाभविष्यतो निवारणस्यात्यन्ताऽनुचितत्वं दर्शितम् । पूर्वोक्तविशेषणविशिष्टा मधुकरा भ्रमराः, पादन्यासविषण्णाः, पादयोर्न्यासेन अस्मत्कृतेन लतामण्डपाभ्यन्तरे चरणयोः क्षेपेण करणेन विषण्णा विषादं प्राप्ताः पीडिताः सन्तः, वयमिव अहमिवेति यावत्, कान्तावियुक्ताः प्रियाविरहिताः स्युर्भवेयुः । सम्भावनायां लिङ् । भ्रमरैस्तावत्सम्प्रति प्रियासहचरैर्मकरन्दास्वादमग्नैरमन्दानन्दसन्दोहः समनुभूयते मञ्जु गुञ्जद्भिः । कुञ्जे च करिष्यमाणः प्रवेशोऽयमस्मदीयो नूनं ततः सम्भ्रमादितस्ततो भविष्यतो भ्रमरान्प्रियाभिर्वियोजयेत् । इत्थं सत्यहमिव ते वियोगवैकल्यं प्राप्स्यन्ति । न चैतत्कर्तुमुत्सहे पुनर्वियोगमहिमानं पूर्णतया जानन्निति भावः । अत्र च विरहस्य सुतरां दुःसहत्वं सूचयतो वत्सराजस्य वासवदत्ताविषयो ह्यद्वतः परतरो विषादभावः सुविशदं व्यक्ततां नीतः। एतेन-कार्यगौरवात् प्रियां नूतनां परिणीतवतो राज्ञः प्रेम वासवदत्तायां पद्मावत्यपेक्षया विशिष्टं दर्शितम् । पद्येऽस्मिन्नार्यावृत्तम् । तथाच तल्लक्षणम्- "यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या" इति ॥ ३ ॥

---

मकरन्द-पान से मत्त भौंरे काम-पीड़ित प्रियाओं से आलिङ्गित होते हुए हम लोगों के पैर की आहट से दुखी हो हम लोगों की भांति कान्ताओं से वियुक्त हो जायंगे । इसलिये हम दोनो यहीं बैठें ।

तस्मादिहैवासिष्यावहे ।

विदूषकः—(क) एव्वं होदु ।

[ उभावुपविशतः । ]

---

(क) एवं भवतु ।

---

इत्थमिदं कुञ्जान्तःप्रवेशदूषणं प्रदर्श्य तत्रैव शिलातलेऽवस्थितिं रोचयति राजा—तस्मादिति । तस्मात् पूर्वोक्तान्मधुकरत्रासपरिहाररूपात्कारणादिति यावत्, इहैव लतामण्डपाद्बहिः शिलातल एव, आसिष्यावहे उपवेक्ष्यावः । मधुकरत्रासभिया कुञ्जान्तः प्रवेष्टुं नोचितमित्यतोऽत्रैव शिलातलेऽवस्थितिं कृत्वा पद्मावत्यागमनं प्रतीक्षणीयमावाभ्यामिति भावः ।

अत्रार्थे सम्मतिमाह स्वीयां विदूषकः—एव्वं इति । नूनमिमं कुञ्जान्तःप्रवेशाभिलाषं त्यक्त्वा शिलातल एवावस्थितिरिदानीं करणीयेत्यर्थः ।

द्वयोस्तत्रोपवेशं दर्शयति—उभावुपविशत इति । एतदनन्तरं त० गणपतिशास्त्रिकृतव्याख्यानेऽस्मिन् स्वप्नवासवदत्ते "राजा—[ अवलोक्य ] पादाक्रान्तानि पुष्पाणि सोष्म चेदं शिलातलम् । नूनं काचिदिहासीना मां दृष्ट्वा सहसा गता ॥" इत्यधिकः पाठो दृश्यते । तत्र च रामचन्द्रकृते नाट्यदर्पणेऽनुमानोदाहरणप्रदर्शप्रसङ्गे 'पादाक्रान्तानी'ति पद्यस्योपलब्धेः पूर्वोक्तः पाठः सुचिरं प्रचाराभावात्पाठभ्रंशं प्राप्तोऽनुमीयत इत्युक्तम् । यत्किमप्यास्ताम्, पाठोऽयं पूर्वमासीत् प्रचाराभावेन च चिराद्भ्रष्टः केनापि मध्ये प्रक्षिप्तो वेत्यत्र नेदानीं निर्णेतुं पार्यते । अत्रैतन्निवेशनमन्तरापि पूर्वापरसङ्गतिरविच्छिन्नैवास्तीति न काप्येतस्यावश्यकता प्रतीयते । समुचितप्रमाणोपलम्भाभावाच्च मूले तन्निवेशनं नोचितमिति केवलं सङ्ग्रहाभिलाषाल्लोकलोचनपदवीमानेतुं च पाठोऽयं व्याख्यायां प्रदर्श्यते ।

---

विदू०—अच्छा, यही सही ।

( दोनो बैठते हैं )

चेटी—(क) भट्टिदारिए ! रुद्धा खु ह्म वयं ।

पद्मावती—(ख) दिट्ठिआ उववि‌ट्ठो अय्यउत्तो ।

---

(क) भर्तृदारिके ! रुद्धाः खलु स्मो वयम् ।

(ख) दिष्ट्योपविष्ट आर्यपुत्रः ।

---

स्फुटमर्थावगतये च तद्व्याख्यानं यथा—तत्र च शिलातले समन्ततो दत्तदृष्टी राजा विदूषकेण सूचितचरं शिलातलगतमूष्माणमनुभवँस्तत्र स्वीयमनुमानमाह--अवलोक्येत्यादि । अवलोक्य समन्ततो दृष्टिं दत्त्वा ऽनुभवोचितं विचार्येत्यर्थः । वदतीति शेषः । तदेवाह—पादाक्रान्तानीति । पुष्पाणि भूमौ पतितानि शेफालिकाप्रसूनानि, पादाक्रान्तानि पददलितानि चरणन्यासेन मृदितानि सन्ति, इदम् अस्मदाश्रयीभूतं शिलातलं च सोष्म ऊष्मणा सहितम् उष्णमिति यावत्, वर्तते । अतो हेतोर्नूनं निःसंशयं काचिदबला इहात्र शिलातले आसीनोपविष्टासीत्पूर्वम् । एवं चेत्सेयमधुना कुतो नोपलभ्यत इत्याशङ्क्याह—मामिति । मां दृष्ट्वा अत्रागच्छतो मे दूरादर्शनं कृत्वा सहसाऽकस्मादितः प्रदेशात्क्वापि गता पलायिता । अत्र च पुष्पाणां पददलितत्वेन समन्ततः प्रान्तेऽस्मिन्सञ्चरणं, शिलातल ऊष्मोपलब्ध्या च पूर्वमत्रोपविश्याऽचिरादित उत्थानं च कस्याश्चिदबलाया अनुमीयते । सम्भाव्यते च मामागच्छन्तमालोक्य मद्दर्शनपरिहाराय तया कुत्रापि पलायितं स्यादिति भावः ।

तत्र द्वारान्तिक एव तयोर्द्वयोरुपवेशान्निर्गमनप्रतिबन्धं सम्भावयन्त्याह चेटी पद्मावतीम्—भट्टिदारिए इति । खलु निश्चये, स्मेति वाक्यपूरकम् । अयि ! राजकन्ये ! एतयोः श्रीमद्राजविदूषकयोरत्र शिलातले सम्प्रत्युपवेशेन सर्वा वयं कुञ्जेऽस्मिन्नावृताः सञ्जाताः । तद्दृष्टिपरिहारेण नेतो निर्गन्तुं शक्यतेऽस्माभिरिति भावः ।

अत्रावरोधेऽप्यात्मन आनुकूल्यं दर्शयति पद्मावती—दिट्ठिआ इति ।

---

दासी—राजकुमारी ! हम लोग यहां पर रोकी गईं ।

पद्मा०—भाग से आर्यपुत्र वहीं बैठ गये ।

वासवदत्ता—[आत्मगतम्](क) दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो।

चेटी—(ख) भट्टिदारिए! सस्सुपादा खु अय्याए दिट्ठी।

---

(क) दिष्टया प्रकृतिस्थशरीर आर्यपुत्रः।
(ख) भर्तृदारिके! साश्रुपाता खल्वार्याया दृष्टिः।

---

दिष्ट्या दैवेन। आर्यपुत्रः श्रीमान् मे प्रियतमस्तावदत्रैव शिलातले समुपविष्टो न किलान्तः प्रविष्ट इत्यतोऽत्राधुनावरुद्धानामप्यधुनैतदस्माकं सौभाग्यम्। संवृत्ते च कुञ्जान्तः प्रवेशे तस्य दर्शनं नूनमनिवार्यम्। तत्तु नापतितमित्येष रोधोऽपि ससन्तोषमस्माभिः सोढव्य इति भावः।

सुचिरादत्रेदं प्रियदर्शनसौभाग्यं लब्ध्वा सानन्दं मानसं वचनमुद्गिरति वासवदत्ता—दिट्ठिआ इति। प्रकृतिस्थशरीरः, प्रकृतिस्थं स्वस्थं नीरोगं शरीरं वपुर्यस्य सः। अस्तीति शेषः। अतिचिराद् दृष्टिगोचरतां गच्छतः श्रीमतः प्रियतमस्य शरीरमद्येदं दैवात्स्वस्थं दृश्यते। विरहावस्थायामस्वस्थता भृशं सुलभापि प्रेयांसमेनं न सा समाक्रान्तवतीति महत्सौभाग्यं ममेत्यर्थः। भर्तृदेहस्वास्थ्यस्य भार्ययाऽपेक्षणीयत्वात्तद्विषयकमेतादृशं वचो युज्यते वासवदत्तायाः।

उपलभ्य भर्तुः शरीरस्वास्थ्यं वासवदत्ता पूर्वं मोदाश्रूणि पुनः स्वास्थ्येनैव हेतुना सूचितां भार्यान्तरगतचेतसः प्रेयसः स्वविषये स्नेहस्य न्यूनतां सम्भाव्य दुःखाश्रूणि तदानीं मुञ्चति स्म। तदेवेदं निरूप्य चेटी पद्मावतीमुखाद्वासवदत्ताश्रुपातस्य कारणं ज्ञातुमिच्छन्ती ब्रूते—भट्टिदारिए इति। साश्रुपाता अश्रुपातेन सहिता बाष्पकलुषेति यावत्। खलु वाक्यसौन्दर्ये, आर्याया आवन्तिकायाः। दृष्टिरित्येकत्वं जातौ। अयि! राज-

---

वासव०—[ स्वगत ] बड़ा ही सौभाग्य है कि स्वामी शरीर से स्वस्थ हैं।
दासी—राजकुमारी! आर्या वासवदत्ता की आंखों से आंसू गिरते हैं।

वासवदत्ता--(क) एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा पडिदेण सोदआ मे दिट्ठी ।

पद्मावती--(ख) जुज्जइ ।

विदूषकः—(ग) भो ! सुण्णं खु इदं पमदवणं । पुच्छि-

---

(क) एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः ।

(ख) युज्यते ।

(ग) भोः ! शून्यं खल्विदं प्रमदवनम् । प्रष्टव्यं किञ्चिदस्ति ।

---

कुमारि ! श्रीमत्या आवन्तिकाया नयनाभ्यां समयेऽस्मिन्नश्रूणि पतन्ति । ज्ञायतां तत्कारणं भवत्येत्यर्थः ।

आत्मनोऽश्रुपातं चेट्याऽवगतं विभाव्य तत्र पद्मावतीचेट्योः सम्भाव्यमानमन्यथाशङ्कनं परिहर्तुकामा नायकदर्शनादुद्गतं सात्त्विकभावं निह्नुवाना स्वकीयाश्रुपाते हेत्वन्तरं प्रदर्शयति वासवदत्ता—एसा इति । खल्विति निश्चयार्थकम् । अविनयादशासनात् स्वच्छन्दमत्रेतस्ततो भ्रमणात् , सोदका अश्रुपूर्णा, सञ्जातेति शेषः । अत्र किल प्रदेशे भ्रमराः स्वैरं सर्वतो भ्रमन्ति, तेन काशपुष्पाणां परागः परिपतति, स चेदानीं मच्चक्षुषोरन्तर्गतः। नूनमनेनैव हेतुना तत्रैतान्यश्रूण्युद्गतानि सन्ति । नान्यत्किमप्यश्रुपाते कारणं ममेत्यर्थः।

तदेतत्कारणमत्र सम्भवतीति पद्मावत्याह—जुज्जइ इति । भ्रमरपरिभ्रमणसम्भवत्काशप्रसूनपरागसम्पातवशादक्षणोरयमस्रोद्गमो भवितुमर्हति ।

अथास्मिन्समये 'तत्र स्थले तृतीयः कोऽपि नास्ती'ति रहस्यार्थप्रकाशनौचित्यं मन्यमानः सुहृदं राजानं प्रति 'प्रीतिपात्रं ते पद्मावती वासवदत्ता वे'त्येवं प्रश्नमुपक्षेप्तुकामस्तदुचितं वचः प्रस्तौति विदूषकः–भो इति ।

---

वासव०—भौरों की गड़बड़ से कास के फूलों की धूलि पड़ने के कारण आंखों में पानी आगया ।

पद्मा०—ठीक है, हो सकता है।

विदू०—महाराज ! यह नजर-बाग बिलकुल सूना है । कुछ पूछना है।

